॥ दशाक्षरमन्त्रस्तोत्रम् ॥

श्रीगणेशाय नमः ।

मुद्गल उवाच ।
असच्छक्तिश्च सत्सूर्यः समो विष्णुर्महामुने ।
अव्यक्तः शङ्करस्तेषां संयोगे गणपो भवेत् ॥ १॥

संयोगे मायया युक्तो गणेशो ब्रह्मनायकः ।
अयोगे मायया हीनो भवति मुनिसत्तमा ॥ २॥

संयोगायोगयोर्योगे योगो गणेशसंज्ञितः ।
शान्तिभ्यः शान्तिदः प्रोक्तो भजने भक्तिसंयुतः ॥ ३॥

एवमुक्त्वा गणेशस्य ददौ मन्त्रं स मुद्गलः ।
एकाक्षरं विधियुतं ततः सोऽन्तर्हितोऽभवत् ॥ ४॥

ततोऽहं गणराजं तमभजं सर्वभावतः ।
तेन शान्ति समायुक्तश्चरामि त्वकुतोभयः ॥ ५॥

न गणेशात्परं ब्रह्म न गणेशात्परं तपः ।
न गणेशात्परं कर्म ज्ञानं न गणपात्परम् ॥ ६॥

न गणेशात्परो योगो भक्तिर्न गणपात्परा ।
तस्मात्स सर्वपूज्योऽयं सर्वादौ सिद्धिदायकः ॥ ७॥

गणेशानं परित्यज्य कर्मज्ञानादिकं चरेत् ।
तत्सर्वं निष्फलं याति भस्मनि प्रहुतं यथा ॥ ८॥

सर्वांस्त्यज्य गणेशं यो भजतेऽनन्यचेतसा ।
सर्वसिद्धिं लभेत्सद्यो ब्रह्मभूतः स कथ्यते ॥ ९॥

एवमुक्त्वाऽत्रितस्तस्मै ददौ मन्त्रं दशाक्षरम् ।
विधियुक्तं ततः साक्षादन्तर्धानं चकार ह ॥ १०॥

इति दशाक्षरमन्त्रस्तोत्रं समाप्तम् ।